विरुद्धादित्वात् पक्षविशेषणमहिम्ना तद्दशायां पक्षे

---

तत्वान्तानि तदभावः कदाचित् सत्प्रतिपक्षोत्तीर्णोऽपीति, स्वज्ञान-कालीनतया सविशेषितः स च न तादृशोऽन्यदा तथा ज्ञानरूप-विशेषणाभावेन विशिष्टाभावात्। एवञ्च सति सव्यभिचारित्वादि-रेव पर्य्यवसितः तथा सत्यपि यथा न साध्याविशेषः तथाकरएव स्फुटं। ननु स्वज्ञानकालीनतया जनकत्वाभावे विरुद्धत्वादित्या-दिव्यभिचरितस्य तज्जनकतावच्छेदकरूपविरहरूपत्वेऽपि स्वज्ञान-विरहकाले विशिष्टाभावात् तथा जनकत्वाभावे यथाश्रुते जन-कतावच्छेदकाभावरूपे विवक्षितेऽपि साध्ये स्वज्ञानाप्रवेशे विरुद्धत्वा-दिति व्यर्थविशेषणं कदाचिदजनकत्वस्य ज्ञायमानत्वलक्षणजनकता-वच्छेदकरूपविरहात्मनोऽज्ञायमानत्वस्य च केवलान्वयित्वादित्यभि-सन्धिना साध्यं निष्कृष्याह, 'तथाहीति, तथाच ज्ञानकालस्य पक्ष-तावच्छेदकतया तत्कालीनत्वं साध्यस्य न तु तस्यापि साध्ये प्रवेशो येन व्यभिचारः। न च व्यर्थविशेषणता, विवक्षितसाध्यस्यासार्व्व-त्रिकत्वात्, साध्यसिद्धिजनकतावच्छेदकत्वन्तु तत्प्रत्ययजनकज्ञाने विषयतावच्छेदकत्वं अतएवासत्प्रतिपक्षत्वं तुल्यवत्त्वज्ञानाभावरूपं प्रतिबन्धकाभावतया स्वरूपसदेवानुमितिजनकं न तु ज्ञातमिति मतावकाशेनेदं घटत इत्यरुच्या लक्षणान्तरं वक्ष्यते, तथाच ज्ञाय-मानत्वज्ञानमपि यद्यनुमितिहेतुः स्यात् तदा ज्ञायमानत्वमपि तथा जनकतावच्छेदकं भवेत् येनाज्ञातत्वमवच्छेदकाभावः स्यात् एवञ्च सद्धेतौ सत्प्रतिपक्षाद्यनवतारे नोक्तावच्छेदकाभावः कोऽपीति न

साध्यप्रत्ययाजनकत्वं सिद्ध्यति, बाधितादावपि लिङ्गत्वभ्रमात् पक्षे साध्यप्रत्ययजनकत्वमिति न प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिः ।

यद्वा अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वमसा-

केवलान्वयित्वमिति न व्यर्थविशेषणता । न च सर्व्वो वह्निव्याप्यवान् वह्निमान् तत्त्वादित्यनुमाने स न तद्वान् मेयत्वादित्यादिना सत्प्रतिपक्षेणैवमन्यत्रापीति सर्व्वमेव सत्प्रतिपक्षितमिति वाच्यं । सर्व्वस्य सर्व्वत्रैवमवताराभावात् । न च स्वज्ञानदशायामित्यत्र ज्ञाने यथार्थत्वायथार्थत्वविकल्पः, ज्ञानमात्रस्य विवक्षितत्वात् भ्रममादायातिप्रसङ्गस्य तादृशावच्छेदकाभावस्वरूपसत्त्वाभावादेवाभावात् । न हि व्यभिचारिभ्रमे वास्तवः सः । न च सत्प्रतिपक्षे विरुद्धव्याप्यादौ लिङ्गान्तरे कुतो वास्तवसत्त्वमिति वाच्यं । प्रतीतिबलेन तत्र तत्सम्बन्धाभ्युपगमात् स च स्वरूपसम्बन्धविशेष एव इत्युक्तं हेत्वाभासलक्षणे । ये तु यथाश्रुते साध्ये व्यर्थविशेषणत्वाभावेन स्वज्ञानकालमपि साध्ये प्रवेशयन्ति तेषां ज्ञानमात्रगर्भतायां सद्धेतावतिप्रसङ्गः प्रमात्वपर्य्यन्ते च वक्तव्ये सत्प्रतिपक्षेऽव्याप्तिरित्यपि दोषो भवति, अस्माकन्तु न दोषलेश इति संक्षेपः । ननु बाधिते तथा साध्यप्रत्ययासिद्ध्या तज्जनकतावच्छेदकाभावोऽप्रसिद्ध इत्यत आह, 'लिङ्गेति तस्यान्यस्य वा लिङ्गत्वभ्रमदशायामित्यर्थः ।

उक्तारुच्या लक्षणान्तरमाह, 'यद्वेति, तत्त्वञ्चात्र तद्वर्त्तमानत्वं विवक्षितमतो न सत्प्रतिपक्षोत्तीर्णेऽतिप्रसङ्गः, न हि पूर्व्वत्रेवात्रापि

धकत्वं, तथाहीदानीमिदमनुमितिप्रतिबन्धकतावच्छे-दकरूपवदनैकान्तिकादित्वात् ज्ञानवत् अनुमितिप्रति-बन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतयानैकान्तिका-दित्वमेव। न च साध्याविशेषः, उपाधिविशेषस्यानुमे-यत्वात् तोयत्वेन पिपासोपशमनसमर्थतावच्छेदकरूप-परत्वानुमानवत्।

---

स्वज्ञानदशायामित्यस्ति, अतएव तद्वर्त्तमानत्वस्य तदवच्छिन्नत्वरूपस्य सार्व्वत्रिकत्वाद्विरुद्धत्वादित्यादौ न व्यर्थविशेषणतेति भावः।

केचित्तु नात्र व्यर्थविशेषणता व्याप्तिरुभयगृहीततया व्याप्ति-ग्राहकसामग्रीसम्पादनाय हेत्वनुपन्यासादपि तु समयबन्धादुपन्यस्तस्य हेतुत्वप्रतिपादनाय तद्व्याप्यतानवच्छेदकस्य विशेषणस्य प्रवेशेऽपि नक्षतिः, प्रतिबन्धप्रयोजकतयोपन्यस्तस्य विशिष्टस्योभयसिद्धव्याप्तिकस्य पञ्चम्या हेतुत्वाभिधानादित्यपि वदन्ति।

ननु व्यभिचारित्वादि न प्रतिबन्धकतावच्छेदकं तत्सत्त्वेऽप्यप्रति-बन्धादित्यत आह, 'अनुमितीति तथाचानुमितिप्रतिबन्धकज्ञान-विषयतावच्छेदकत्वमसाधकत्वमिति पर्य्यवसितोऽर्थः। ननु साध्या-प्रसिद्धावव्यापकमिदमिति चेत्, न, आद्ये स्वज्ञानदशायामिति विशेषणदानादेव तदसङ्ग्राह्यत्वलाभात्, अन्त्येऽपि न पदार्थरूपसाध्य-स्याप्रसिद्धिः जवगड़दशादिवन्निरर्थकत्वात् किन्तु वाक्यार्थरूपसाध्या-प्रसिद्धिर्व्वाच्या तथाच साध्यज्ञानस्य प्रकृतहेतुनिष्ठव्याप्तिप्रतियोगि-कत्वाप्रकारकत्वमनुमितिप्रतिबन्धकतावच्छेदको धर्म्मः स चात्रा-

अन्ये त्वनैकान्तिक-बाधित-विरुद्धेष्वव्याप्यत्वं व्याप्यत्वासिद्धेऽनैकान्तिकत्वं स्वरूपासिद्ध-सत्प्रतिपक्षासाधारणेषु दशाविशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वमसाधकत्वं। न चैवमनैकान्तिकोऽसाधक इति सहप्रयोगानुपपत्तिः, तत्राव्याप्यत्वस्यासाधकशब्दार्थत्वात्, असाधकताननुगमे हेत्वाभासत्वमनुगतमेव यस्य ज्ञानमनुमितिप्रतिबन्धकं तस्य हेत्वाभासत्वादिति(१)।

---

प्रसिद्धावपि साध्यस्य तद्भ्रमे तथा प्रतियोगित्वप्रकारकत्वाभावादयुक्तः। वस्तुतः साध्याप्रसिद्धिः शुद्धमपार्थकं हेत्वाभासानामेवासाधकतासाधकत्वात् अज्ञानरूपासिद्ध्यादीनान्त्वपार्थकत्वं हेत्वर्थान्वययोग्यताविरहनिश्चयात् हेत्वाभासानान्तथात्वेऽप्युपजीव्यतया पृथग्दोषत्वं। न चाज्ञाने किञ्चिदाभासान्तरं तथोपजीव्यमस्ति, अतएव तेषामनाभासत्वे निग्रहान्तरत्वाभावेऽपि कथायामुद्भावनं, अन्यथा अपार्थकाप्रवेशे अन्यत्राप्रवेशे द्वाविंशत्यधिकनिग्रहस्थानानामभावे तदुद्भावनं न स्यादेव। "हेत्वाभासाश्च यथोक्ताः" इत्यत्रानुक्तसमुच्चय-

---

(१) बाधनिरूपणप्रस्तावे 'अथ हेत्वाभासानामसाधकतासाधकत्वेनेत्यादिना 'तस्य हेत्वाभासत्वादित्यन्तेन सन्दर्भेण मणिकृता हेत्वाभासस्यासाधकतासाधकत्वं व्यवस्थापितं, तादृशमणिकृत्सन्दर्भस्य मथुरानाथकृतव्याख्याया सप्तसु मथुरानाथकृतटीकापुस्तकेषु अदर्शनात् तादृशसन्दर्भो मथुरानाथेन न व्याख्यातः अथ वा बहुकालाध्ययनाध्यापनाभावेन मथुरानाथकृततादृशसन्दर्भव्याख्याविभागो विलुप्त इत्यनुमाय जयदेवकृतव्याख्यया सहितः तादृशसन्दर्भो मुद्रित इति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे हेत्वाभासानामसाधकतासाधकत्वनिरूपणं ।

॥०॥समाप्तश्च अनुमानखण्डो बाधान्तः ॥०॥

---

परतया चकारव्याख्यानात् तत्सङ्ग्रहः, अनुक्तप्रकारसमुच्चयार्थत्वेन तत्र व्याख्यानात् । न हि धर्म्म्यैवानुक्तोऽपि दृक्तस्य व्याप्यसिद्ध्यादेरनुक्तसाध्यविकलदृष्टान्तादिप्रकारलाभाय चकारकरणात् तदपि तथोद्भावनाय, तेन व्याप्यसिद्धिवद्दृष्टान्तवैकल्यं तेनैव रूपेणोद्भाव्यतइति लभ्यते, तद्वदिहापि साध्याप्रसिद्धिलिङ्गांशज्ञानाद्यपार्थकान्तकृतमेव साध्याप्रसिद्धत्वादिनैव उद्भाव्यं न त्वन्यथेति सर्व्वं समञ्जसं ।

अनुगतसम्भवेऽननुगतं हेयमित्यरुचिं मनसिकृत्याह, 'अन्येत्विति ।

इति श्रीजयदेवमिश्रविरचितः हेत्वाभासानामसाधकतासाधकत्वनिरूपणालोकः ।

समाप्ता बाधान्तानुमानखण्डटिप्पनी ।

---